मादित्य वर्णन्तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।। प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा।। यो देवेभ्य आतपति यो देवानाम्पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये । रुचम्ब्राह्मञ्जनयन्तो देवा अग्रे तदब्रुवन् । यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा असन्वशे ।। श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणा मुम ईषाण सर्वलोकम्म ईषाण ।। नैवेद्यं निवे०

मध्ये पानीयं—एलोशीरलवङ्गादि कर्पूरपरिवासितम् ।
प्राशनार्थं कृतं तोयं गृहाण परमेश्वर ! ।। म० स०

ऋतुफल—बीजपूराम्र-पनस-खर्जूरी–कदली–फलम् ।
नारिकेलफलं दिव्यं गृहाण परमेश्वर ! ।। ऋ० स०

आचमन—कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।
आचम्यतां जगन्नाथ ! मया दत्तं हि भक्तितः ।। आ० स०

अखण्ड ऋतुफल—फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ।
तस्मात् फलप्रदानेन पूर्णाः सन्तु मनोरथाः ।। अ० स०

ताम्बूल पूगीफल—ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ।। तां० स०

दक्षिणा—पूजाफलसमृद्ध्यर्थं दक्षिणा च तवाग्रतः ।
स्थापिता तेन मे प्रीतः पूर्णान् कुरु मनोरथान् ।। द० स०

## आरती

प्रथम चरणोंकी चारवार, नाभीकी दोवार, मुखकी एक या तीनवार और समस्त अङ्गोंकी सातवार आरती करे । पश्चात् शंखजल भक्तों पर छिड़के ।

कदलीगर्भसम्भूतं कर्पूरन्तु प्रदीपितम् ।
आरार्तिकमहं कुर्वे पश्य मां वरदो भव ।।

